ॐ

# ॥ हौत्रमीमांसा ॥

श्रीशृङ्गगिरिसंस्थानविदुषा महीशूरपुरराजस्थान-
धर्माधिकारिणा च ब्रह्मश्री कुणिगल्
रामशास्त्रिणा
विरचिता ।





श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रिता ।
१९१६.

ॐ

# ॥ हौत्रमीमांसा ॥

श्रीशृङ्गगिरिसंस्थानविदुषा महीशूरपुरराजस्थान-
धर्माधिकारिणा च ब्रह्मश्री कुणिगल्
**रामशास्त्रिणा**
विरचिता ।






श्रीरङ्गस्थ
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रिता ।
१९१६.

॥ श्रीः ॥

# ॥ हौत्रमीमांसा ॥

---*---

अथ भगवानापस्तम्बाचार्यः परिभाषासूत्रे 'यज्ञं व्याख्यास्यामः' इति सूत्रेण यज्ञं व्याख्यातुकामः, 'स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च' इत्यनेन वर्णत्रयाधिकारिकत्वं निरूप्य, 'स त्रिभिर्वेदैर्विधीयते ऋग्वेदयजुर्वेदसामवेदैः' इत्यनेन वेदत्रयसाध्यत्वं प्रतिपाद्य 'ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ' इत्यनेन दर्शपूर्णमासयोः ऋग्यजुर्मात्रसाध्यत्वं प्रदर्श्य 'यजुर्वेदेनाग्निहोत्रम्' इत्यनेनाग्निहोत्रस्य यजुर्वेदमात्रसाध्यत्वं निरूप्य 'सर्वैरग्निष्टोमः' इत्यनेन वेदत्रयसाध्यत्वम् अग्निष्टोमस्य सूत्रयांचकार ॥

तत्र वेदत्रयमध्ये स्तोत्रद्वारा सामवेदस्य, शस्त्रद्वारा ऋग्वेदस्य, ग्रहग्रहणद्वारा यजुर्वेदस्य च विनियोगः प्रदर्शितः ॥

'उच्चैः ऋग्वेदसामवेदाभ्यां क्रियते' 'उपांशु यजुर्वेदेन' इति सूत्राभ्यां वेदत्रयस्य स्वरं विधाय, 'ऋग्वेदेन होता करोति । यजुर्वेदेनाध्वर्युः । सामवेदेनोद्गाता । सर्वैर्ब्रह्मा' इत्यादिसूत्रैः ऋत्विङ्नियमनमपि सूत्रयामास ॥

पूर्वोदाहृतसूत्रनिचयेन ऋग्वेदेन हौत्रं यजुषाध्वर्यवं सामवेदेनौद्गात्रं कुर्यादित्यर्थः प्रतीयते ॥

'यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति अथ केन ब्रह्मत्वं क्रियते त्रय्या विद्ययेति ब्रूयात्' इति श्रुत्यापि पूर्वोक्तार्थः सुस्पष्टं प्रतीयते । तत्र तत्तद्वेदमात्रविहितपदार्थेषु वा हौत्रादिकरणे होत्रध्वर्य्वादिकर्तृकत्वे वा न कोऽपि संशयः प्रतीयते ॥

किं तु तत्तद्वेदतत्तत्सूत्रादिषु विहितानां पदार्थानां वेदान्तरेषु सूत्रान्तरेषु च विधाने तत्रापि च परस्परं विरोधे कथमनुष्ठेयमिति भवति संशयः ॥

यथा, अग्निहोत्रं तावत् याजुर्वेदिकमिति सुप्रसिद्धमेतत् । तदृग्वेदे विहितम् । आश्वलायनाचार्यैः सूत्रितं च । तथा ज्योतिष्टोमे बहिष्पवमाने 'अध्वर्यु प्रस्तोतान्वारभते' इत्यादिना प्रसर्पणं सामवेदीयं द्राह्यायणसूत्रकारैर्विहितम् । तदापस्तम्बाचार्यैः किंचित्क्रमभेदेन सूत्रितम् । तथा हौत्रं समग्रं ऋग्वेदे विहितम् । आश्वलायनाचार्यैः सूत्रितं च । तत् हविर्यागानां समग्रतया यजुर्वेदे विहितम् । सूत्रितं च आपस्तम्बबोधायनाद्याचार्यवर्यैः । एवमादिषु बहुषु स्थलेषु विरोधाः प्रतीयन्ते । तन्निर्णयाय विचारः प्रस्तूयते ॥

प्रकृते महराष्ट्रदेशेषु आश्वलायनशाखिनः केचन दर्शपूर्णमासादिसर्वयागेष्वपि आर्चिकमेव हौत्रं सर्वशाखिभिरपि करणीयमिति विवदन्ते ॥

याजुषास्तु— सर्वहविर्यागानां हौत्रस्य यजुर्वेदे आपस्तम्बादिसूत्रेषु च विहितत्वात् हविर्यागेषु परं याजुषैः एतदेव अनुष्ठेयम् । सोमादिषु परमार्चिकं हौत्रमनुष्ठेयमिति वदन्ति । प्रदर्शयन्ति च स्वस्वपक्षसाधकप्रमाणान्युभयपक्षीयाः । तत्सर्वं

सम्यगालोच्य वयमपि यथामति विचारयामः ॥

पूर्वपक्षवादिनः याजुषहौत्रविचाराख्यग्रन्थे किमिदं याजुषहौत्रं विहितत्वादनुष्ठेयम्, उत अप्रतिषिद्धत्वाद्वा, परंपराप्राप्तत्वाद्वा, इति त्रेधा विकल्प्य तत्राद्ये विधायकानुपलंभादेव नानुष्ठेयम् । ननु यजुर्वेदे केषांचिन्मन्त्राणां पुरोनुवाक्यादिस्वरूपविशेषनिर्देशपूर्वकं पठितत्वात्तथा पाठस्यान्यथानुपपत्त्या विधिः कल्प्यते इति चेत्, न, अनुमितविध्यपेक्षया प्रत्यक्षश्रुतेर्बलीयस्त्वेन विरुद्धश्रुत्यभावे एव विधेः कल्पनीयत्वात् । 'यदृचैव हौत्रं क्रियते' इति श्रुत्या ऋग्घौत्रस्य विहितत्वेन लैङ्गिकविधिकल्पने श्रुतिविरोधः स्फुट एव । तथा च विधायकानुपलम्भाद्यजुर्वेदोपदिष्टयाज्यादिमन्त्राणां क्वापि यज्ञकर्मणि विनियोगानर्हत्वेन याजुषहौत्रस्याननुष्ठेयत्वमेव सिध्यतीत्याहुः । तदिदं याजुषश्रुत्यापस्तम्बादिश्रौतसूत्रविद्यारण्यादिवेदभाष्याद्यनवलोकनमूलकम् । तथाहि— तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके सप्तमानुवाके 'देवा वै नर्चि न यजुष्यश्रयन्त' इत्यादिना हविर्यागानां हौत्रं विधीयते । हौत्रमन्त्रास्तु कृष्ण-

यजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयकाण्डे पञ्चमषष्ठप्रपाठकयोः हविर्यागानां समग्रतया आम्नाताः । सूत्रितं च हौत्रमापस्तम्बबोधायनाद्याचार्यैः । विवृतं च सुस्पष्टं सर्वज्ञैर्विद्यारण्यमुनिभिः वेदभाष्ये । तथाहि—

भाष्यम्— ‘अनुवाकैः षड्भिरेतैराध्वर्यवमुदीरितम् । अथोत्तरैरनुवाकैर्हौत्रं विवक्षुरस्मिन्सप्तमेऽनुवाके तदनन्तरभाव्यष्टमे च सामिधेनीमन्त्रा व्याख्यायन्ते । ते च ब्राह्मणग्रन्थे तृतीयकाण्डे पञ्चमप्रपाठके समाम्नाताः । कल्पः— पुरस्तात्सामिधेनीनाꣳ होतेत्युपक्रम्य अन्तराहवनीयमुत्करं च प्रतीचीनं गच्छन् जपति कं प्रपद्ये तं प्रपद्ये इत्यादिकमुक्त्वा सत्यं प्रपद्ये इति पक्षान्तरमुक्तम्’ इत्यवतारिकां दत्वा सामिधेनीमन्त्रा व्याख्याताः ॥

अष्टमानुवाकभाष्ये तु— ‘सप्तमे सामिधेन्याद्या व्याख्याता-त्यन्तविस्तरात्; अथाष्टमे अवशिष्टाः सामिधेन्यो व्याख्यायन्ते’— इति ॥

नवमे तु— ‘द्वितीयाद्याः सामिधेन्यो व्याख्याता अष्टमे

स्फुटम्; अथ नवमे प्रवरमन्त्रस्य निगदस्य स्रुगादापननिगदस्य च व्याख्यानं प्रवर्तते'— इति ॥

दशमे तु— 'व्याख्याता नवमे स्पष्टं प्रवरा निविदादयः; अथ दशमे नैमित्तिक्यः काम्याश्च सामिधेन्य उच्यन्ते'— इति ॥

एकादशे तु— 'नैमित्तिक्यः सामिधेन्यः काम्याश्च दशमे श्रुताः; एकादशे सामिधेनीषु होतुर्नियमविशेषोऽध्वर्योराघारादिविशेषश्चाभिधीयते'—

द्वादशे तु— 'होतुर्नियम आघारश्चोक्तमेकादशे द्वयम्; अथ द्वादशे काम्येष्टियाज्यानुवाक्या उच्यन्ते'।

द्वितीये काण्डे षष्ठप्रपाठके प्रथमानुवाके तु— 'हौत्रमाध्वर्यवं चाघारान्तं पञ्चम ईरितम्। प्रयाजाद्यवशिष्टं तु वक्ति षष्ठे प्रपाठके ॥ तत्र प्रथमानुवाके प्रयाजा विधातव्याः। तेषां मन्त्रास्तु मन्त्रकाण्डे पञ्चमानुवाके एवाम्नाताः' ॥

द्वितीये तु—' आद्यानुवाके विस्पष्टं प्रयाजाः पञ्च वर्णिताः।

अनुवाके द्वितीयेऽस्मिन् वक्तव्यावाज्यभागकौ ॥ तन्मन्त्रास्तन्मन्त्रकाण्डे समाम्नाताः । कल्पः— यदा जानात्यग्नयेऽनुब्रूहीति तदाग्नेयस्याज्यभागस्य पुरोनुवाक्यामन्वाहाग्निर्वृत्राणि जङ्घनदिति पौर्णमास्यामग्निःप्रत्नेन जन्मनेत्यमावास्यायां यदा जानात्यग्निं यजेति तज्जुषाणेन यजति जुषाणो अग्निराज्यस्य वेत्विति यदा जानाति सोमायानुब्रूहीति तत्सोमस्य पुरोनुवाक्यामन्वाह त्वं सोमासि सत्पतिरिति पौर्णमास्यां सोमगीर्भिष्ट्वा वयमित्यमावास्यायां यदा जानाति सोमं यजेति तज्जुषाणेनैव यजति जुषाणः सोम आज्यस्य हविषो वेत्विति'। उत्तरत्र भाष्ये 'कल्पः— अथ स्विष्टकृतः पिप्रीहि देवानिति पुरोनुवाक्यामनूच्य ये यजामहेऽग्निꣳ स्विष्टकृतमयाडनिरग्नेरिति यथादेवतं निगदमुक्त्वा जातवेदा जुषताꣳ हविरग्ने यदद्य विशो अध्वरस्येत्यृचमनूच्य यजति' इति ॥

तृतीये तु — 'आज्यभागौ च याज्यानुवाक्या उक्ता द्वितीयके; अथ तृतीयानुवाके प्रधानभूत आग्नेयपुरोडाशोऽभिधातव्यः । तत्रादौ तावदुपस्तरणाभिघारणे विधत्ते'।

चतुर्थे तु— 'तृतीये प्रोक्त आग्नेयः पुरोडाशो दिनद्वये; अथ चतुर्थे अनुवाके वेदिर्विधातव्या । तस्याश्च वेदेः साधनभूतस्य स्फ्यस्य मन्त्रेणादानं विधत्ते' ॥

पञ्चमे तु— 'चतुर्थे वेदिनिर्माणमशेषेण प्रपाञ्चितम्; अथ पञ्चमे तस्यां वेद्यां बर्हिर्विषयप्रयोगोऽभिधीयते । तत्र बर्हिषः प्रोक्षणं विधातुं स्तौति' ।

षष्ठे तु— 'प्रयोगो बर्हिषः स्पष्टं पञ्चमे प्रतिपादितः; अथ षष्ठेऽनुवाके उपांशुयाजस्विष्टकृतौ वक्तव्यौ। तत्रादौ तावत् परिधीनां परिधानं विधातुं प्रस्तौति'— इति ।

सप्तमे तु— 'उपांशुयाजः षष्ठेऽस्मिन् स्विष्टकृच्च समीरितः । आध्वर्यवं समाप्याथ हौत्रशेषो निरूप्यते ॥ तत्रास्मिन् सप्तमेऽनुवाके इडोपाह्वानविधिः तन्मन्त्रव्याख्यानं च प्रस्तूयते' ।

अष्टमे तु— 'इडोपाह्वानमुदितमनुवाके हि सप्तमे । इडाप्राशित्रभक्षौ द्वावुच्येते अष्टमे पुनः ॥

नवमे तु— 'अष्टमे स्पष्टमुदितमिडाप्राशित्रभक्षणम् । अ-

नूयाजाः सूक्तवाका नवमे द्वयमीर्यते ॥ तत्रादौ तावदाग्नीध्रभागस्य प्रदानं विधत्ते' ॥

दशमे तु— 'अनूयाजाः सूक्तवाकव्याख्या नवम ईरिताः; अथ दशमे शंयुवाकमन्त्रव्याख्या पत्नीसंयाजाश्च वक्ष्यन्ते । तत्र शंयुवाकमन्त्रान् व्याख्यातुं प्रस्तौति' ॥

एकादशे तु—'दशमे शंयुवाकाश्च पत्नीसंयाजकाः स्थिताः। या दर्शपूर्णमासाख्या सेष्टिरत्र समापिता ॥ अथैकादशे संवर्गेष्टिहौत्रमन्त्रा अभिधीयन्ते । ननु सत्यं प्रपद्ये इत्यादिक एको हौत्रकाण्डः उभावामिन्द्राग्नीत्यादिरन्त्यानुवाकात्मकोऽपरः । तयोर्मध्ये युक्ष्वाहीत्यनुवाको न समाम्नातः तत्कथमस्य हौत्रत्वम्? समाख्ययेति वदामः— यथा तयोः काण्डयोः याज्ञिकानां समाख्यया हौत्रत्वम् तथास्याप्यनुवाकस्येति द्रष्टव्यम् । अत एवापस्तम्ब आह— अग्नये संवर्गाय पुरोडाशमष्टाकपालम् इत्युक्तम् युक्ष्वाहि देवहूतमान् इति पञ्चदशसामिधेनीरन्वाह नित्यया परिदधाति कुवित्सुनो गविष्टय इति याज्यानुवाक्ये यस्याजुषद्धिश्चाहिते इति संयाज्ये इति ॥

द्वादशे तु— 'एकादशे तु कथितं संवर्गेष्ट्यादि हौत्रकम् । द्वादशे पितृयज्ञस्य हविषां हौत्रमुच्यते ॥ कल्पः— एकां सामिधेनीं त्रिरन्वाह उशन्तस्त्वा हवामहे इत्येताम् इति ॥

प्रदर्शितानुवाकेषु ब्राह्मणवाक्यैः तत्र तत्र प्रदर्शितपदार्थाः विहिताः । विद्यारण्यभाष्ये तु कल्पसूत्रादिकमुदाहृत्य मन्त्राणामर्थनिरूपणपूर्वकं प्रयोगः सप्रपञ्चं निरूपितः ॥

श्रौतविधिमनुसृत्यैव आपस्तम्बबोधायनादिकल्पसूत्रकाराः सप्रपञ्चं हौत्रं सूत्रयामासुः— श्रौतविध्यभावे सर्वज्ञानां महर्षीणां कथं तत्र प्रवृत्तिः स्यात् ? प्रत्यक्षश्रौतविध्यभावेऽपि सर्वज्ञमहर्षिप्रवृत्त्यन्यथानुपपत्त्या विधिः कल्पनीयः, किमुत प्रत्यक्षश्रुत्युपलम्भे ॥

यजुर्वेदे तु सर्वेषां हविर्यागानां सर्वोऽपि हौत्रप्रयोगः सप्रपञ्चं निरूपितः । न तु याज्यापुरोनुवाक्यादियत्किंचिन्मन्त्रस्वरूपमात्रम् । एवं स्थिते विधायकानुपलंभाद्यजुर्वेदोपदिष्टयाज्यादिमन्त्राणां क्वापि यज्ञकर्मणि विनियोगानर्हत्वेन याजुषहौत्रस्यानुष्ठेयत्वमेव सिध्यतीति लेखनं अतीव साहसमात्रम् ॥

यत्तु नन्वियम् 'यद्दचैव हौत्रं क्रियते' इति श्रुतिः ब्रह्मत्वविधायकश्रुत्यन्तर्गतेति, न हौत्रस्य ऋक्करणककृतिविषयत्वविधाने समर्थेति चेदास्तां नाम ब्रह्मत्वविधायकश्रुत्यन्तर्भूता, तथापि तत्र महावाक्यार्थत्वेन ब्रह्मत्वं विदध्यादवान्तरवाक्यार्थत्वेन हौत्रं विदध्यादिति का नो हानिर्वेदैकशरणानाम् । एवं च न कथमपि 'यद्दचैव हौत्रं क्रियते' इति श्रुतेः विधायकत्वमपह्नोतुं शक्यमिति जानन्तु कृतधियः इत्युक्तम्— तन्न मनोरमम् ॥

सा श्रुतिः यदि ब्रह्मत्वविधायकश्रुत्यन्तर्गता तदा ब्रह्मत्वमेव विदध्यात् जर्तिलयवाग्वाधिकरणवत् । जर्तिलयवाग्वाधिकरणे तु— 'यद्ग्राम्याणां पशूनां पयसा जुहुयात् ग्राम्यान् पशून् शुचार्पयेत्, यदारण्यानामारण्यान्, जर्तिलयवाग्वा वा जुहुयात् । गवीधुकयवाग्वा वा न ग्राम्यान्पशून् हिनस्ति नारण्यान्' इति अग्निहोत्रद्रव्यरूपपयोविध्यर्थवादभागे आदौ संकीर्तितस्य ग्राम्यारण्यपशुहिंसारूपदोषस्य अन्ते समाधानकीर्तनम् मध्यगतवाक्यप्रतिपाद्यस्य जर्तिलगवीधुकशब्दवाच्यारण्यतिलगोधूमकृतयवाग्वोरग्निहोत्रे वैकल्पिकद्र-

व्यत्वस्याभ्युपगमे एव लभ्यते । न तु कस्यचिदपि पयसः तद्द्रव्यत्वाभ्युपगमे, पशुहिंसादोषतादवस्थ्यापत्तेः । न तु तथाभ्युपगतम् । किं तु 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति पयसाग्निहोत्रं जुहुयात्' इति तदनन्तरश्रुतविध्यनुसारेण पय एव तद्द्रव्यम्; जर्तिलादिवाक्यं तु ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तमपि जर्तिलयवाग्वादिकं यदपेक्षया अहोम्यं तत्पयोऽत्यन्तं प्रशस्तमिति पयःप्रतिपादनशेषोऽर्थवाद इत्यभ्युपगतम् ॥

तद्वदेव प्रकृतेऽपि, ऐतरेयब्राह्मणे पञ्चविंशाध्याये अष्टमखण्डे श्रुतिराह 'तदाहुर्महावदाः३ यद्दचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति । त्रय्या विद्ययेति ब्रूयात्' इति ॥

विद्यारण्यभाष्ये तु—'व्याहृतिहोमप्रसङ्गेन ब्रह्मा बुद्धिस्थः, तस्य तत्कर्तृत्वात् । तथा च आश्वलायन आह जुहोति जपतीति प्रायश्चित्ते ब्रह्माणम् इति । अतः प्रश्नोत्तराभ्यां ब्रह्मत्वं निर्णेतुमुपक्रमते' इत्यवतारिकां दत्वा उदाहृतश्रुतिर्व्याख्याता । तथा

हि—'तत् तत्र प्रायश्चित्तप्रसङ्गे महावदाः ब्रह्मवादिनः आहुः चोदयन्ति, महान्तं प्रौढं वेदं वदन्तीति महावदाः, प्लुतिस्तेषां प्रशंसार्था, यत् यस्मात्कारणात् ऋग्यजुः सामेति हौत्राध्वर्यवौद्गात्राणां करणात् त्रयी वेदत्रयरूपा विद्या व्यारब्धा विविच्य होत्रादिभिः स्वीकृता भवति, अथर्ववेदश्च नात्र मिश्रयितुं शक्यते, आहवनीयादिकर्तव्यस्य तत्राभावात्। अथ तस्मात्कारणात् केन साधनेन ब्रह्मत्वं क्रियत इति चोद्यं तस्य त्रय्या वेदत्रयरूपया विद्यया ब्रह्मत्वं कर्तव्यमित्युत्तरं प्रति ब्रूयात्' इति ॥

जर्तिलाधिकरणे तु 'पयसाग्निहोत्रं जुहुयात्' इत्यन्ते श्रूयमाणविध्यनुसारेणैव जर्तिलादिवाक्यानि स्तुतिपरतया नीतानि न त्ववान्तरतात्पर्येण जर्तिलादिवाक्येष्वपि विधिः स्वीकृतः ॥

तद्वदेव प्रकृतेऽपि अन्ते ब्रह्मत्वस्य विधायकविध्यनुसारेणैव 'यद्दचैव' इत्यादिवाक्यानि यथाकथंचित् स्तुतिपरतया योज्यानि, नावान्तरतात्पर्येण तत्रापि विधिः कल्पयितुं शक्यः वाक्यभेदापत्तेः ॥

अथवा यथाकथंचित् हौत्रं वा विदध्यात् न तूभयम्,

उभयविधाने वाक्यभेददोषः न ब्रह्मणापि परिहर्तुं शक्यः ॥

यत्तु एवमपि यदि 'यद्वचैव हौत्रं क्रियते' इति सामान्यशास्त्रम्, यजुर्वेदहौत्रपठनमात्रं च विशेषशास्त्रमित्येतादृशोऽभिमानः, तदा विशेषशास्त्रेण सामान्यशास्त्रस्य समूलबाधात् चौण्डपवैजयन्तीकृदादिभिः वैकल्पिकयाजुषहौत्रप्रयोगप्रदर्शनस्यासांगत्यमिति। तन्न साधीयः। सामान्यविशेषशास्त्रयोर्बाध्यबाधकभावः शास्त्रे अङ्गीकृतः । तत्र विशेषशास्त्रेण सामान्यशास्त्रस्य समूलबाधः न कुत्राप्यङ्गीकृतः ; तथा सति महदनिष्टमापद्येत। तथा हि— 'मा हिंस्यात्सर्वा भूतानि' इति सामान्यशास्त्रम्, 'अग्नीषोमीयं पशुमालभेत' इति विशेषशास्त्रम्। तत्र वाक्यार्थस्तु, सामान्यशास्त्रेण सर्वभूतहिंसानिषेधे प्राप्ते, विशेषशास्त्रेण अग्नीषोमीयपश्वतिरिक्तभूतहिंसा न कर्तव्येति सामान्यशास्त्रस्य संकोचः क्रियते । न तु सर्वथा बाधः इति । अन्यथा विशेषशास्त्रेण सर्वभूतहिंसा कर्तव्या स्यात् । सा तु वेदैकशरणानामनिष्टा ॥

एवमेव सर्वत्र सामान्यविशेषभावस्थले अङ्गीकार्यः । प्रकृते-

ऽपि हौत्रस्य ऋग्वेदः सामान्यशास्त्रं यजुर्वेदस्तु विशेषशास्त्रम् । विशेषशास्त्रेण याजुषाः हविर्यागानां याजुषमेव हौत्रं कुर्युरिति आर्चिकहौत्रस्य संकोच एव कार्यः, न तु सर्वथा बाधः; तथा सति चौण्डपादिकृतग्रन्थानां नासाङ्गत्यम् ॥

यजुर्वेदादिसामान्यशास्त्रेषु विहितानां पदार्थानां ऋग्वेदादिषु विधाने प्रयोजनं तु उत्तरषट्के आश्वलायनश्रौतसूत्रविवरणे नारायणीये वृत्तिग्रन्थे स्पष्टमुपदर्शितम् ॥

यथा 'अध्वर्युप्रत्ययं तु' इति सूत्रव्याख्याने एतत्सर्वमध्वर्युप्रत्ययम्, छन्दोगप्रत्ययानामध्वर्युप्रत्ययानां सतामस्मच्छास्त्रे यदभिधानं तस्येदं प्रयोजनम्, यद्यस्मच्छास्त्रे विशेषविधिः तेषां सामान्यविधिः तदास्मदीय एव विधिः संग्राह्य इति प्रयोजनम् इति । अनयैव रीत्या आपस्तम्बादिसूत्रेष्वपि विज्ञेयम् ॥

तस्मात्सामान्यविशेषभावः अस्माभिः प्रदर्शितरीत्यैवानुसंधेयः नान्यविधया । चौण्डपाचार्यास्तु हौत्रद्वयं प्रदर्श्य विकल्पेनानुष्ठानमाहुः । तथा च चौण्डपः अत्र वक्ष्यमाणसामिधेन्यनुवचनादि तावद्धौत्रं होतृकर्म चात्रैष्टिकपाशुकहौत्रद्वयमाश्वलायनमा-

पस्तम्बीयं च । तथा हि—'ऋग्वेदेन होता करोति ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ' इत्याचार्यवचनात् ऋग्वेदे तन्मन्त्राणामाम्नानात् आश्वलायनेन तत्सूत्रे प्रतिपादनाच्च आश्वलायनं तावदेकम् । तथा यजुर्वेदे 'देवा वै नर्चि न' इत्यादिब्राह्मणेन तद्विधानात् 'सत्यं प्रपद्ये' इत्यादिप्रश्नद्वये तन्मन्त्राणामाम्नानात् आचार्येण प्रवरानन्तरं तत्प्रतिपादनात् आपस्तम्बीयं चापरम् । अतो विकल्पद्वयेन द्वयोरनुष्ठेयत्वात् यथाहृतभेदमुभयं प्रतिपाद्यत इति ॥

अनेन चौण्डपाचार्यकृतव्याख्यानेन यजुर्वेदस्य हौत्रविधायकत्वमस्तीति, यजुर्वेदे हौत्रमन्त्रा आम्नाता इति आचार्यैः सूत्रितमिति च स्पष्टं प्रतीयते ॥

तैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमप्रपाठके 'सत्यं प्रपद्ये' इति प्रश्ने इष्टिहौत्रं समग्रतया निरूपितम् । 'अञ्जन्ति त्वामध्वर' इति षष्ठप्रश्ने तु पाशुकहौत्रं साङ्गोपाङ्गतया प्रतिपादितम् । विवृतं च विनियोगपूर्वकमापस्तम्बादिकल्पसूत्रादिकमुदाहृत्य सप्रपञ्चं विद्यारण्याचार्यैः वेदभाष्ये ॥

तस्माद्यजुर्वेदस्य हौत्रविधायकत्वमस्तीति हविर्योगानां यजुर्वेदे समग्रतया मन्त्राः आम्नाता इति च सार्वजनीनमेतत् ॥

यत्तु ननु 'देवा वै नर्चि न' इत्यादितैत्तिरीयब्राह्मणस्य याजुषहौत्रविधायकत्वं चौण्डपाचार्येणाङ्गीकृतं तत्कथमविहितत्वं याजुर्वेदिकहौत्रस्येति चेत्, इदमापातरमणीयम् ॥

यजुर्वेदस्य हौत्रविधायकत्वे यथा आधाने वामदेव्यसाम्नः विधायकबलादुपांशुत्वं निर्णीतं भगवता भाष्यकारेण, एवमत्रापि विनियोजकमहिम्ना होतृप्रयोज्ययाजुषमन्त्राणामुपांशुत्वमेव स्यात्। नोच्चैष्ट्वम् ॥

एतेन कैश्चिदाधुनिकैः पण्डितंमन्यैः याजुषहौत्रानुष्ठानाभिनिविष्टैः दर्शपूर्णमासयोर्होतृप्रयोज्ययाजुषमन्त्राणाम् उच्चैः पाठो हठात्कारेण विधीयते, तन्न शास्त्रसंमतमिति सिद्धमेव। तथा विकल्पेन अनुष्ठेयत्वमपि तस्य कैश्चिदुच्यते, तदपि 'ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ' इति सत्याषाढस्मृत्यादिभ्यश्च चिन्त्यमेव ॥

तथा याजुषहौत्रपरित्यागे शाखारण्डत्वदोषः कैश्चिज्ज्ञान-

लवदुर्विदग्धैरिदानींतनैः समुद्भाव्यते; स च यजुर्वेदस्य हौत्रविधायकत्वाभावात्, विधायकत्वे च तदुपदिष्टमन्त्राणामुपांशुत्वस्यापरिहार्यत्वात् उपेक्षणीय इति ॥

तदपि मनोरथमात्रम्; सत्यमाधाने वामदेव्यसाम्नो विधायकबलादुपांशुत्वं भाष्यकारैर्निर्णीतम्; न तथा याजुषहौत्रस्योपांशुत्वं निर्णेतुं शक्यम्; तत्र तु सामगानसहितः सकलप्रयोगो यजुर्वेदविहित एवेति आधानाङ्गभूतस्य साम्नोऽपि प्रयोगः उपांश्विति निर्णीतः। न तु प्रकृते तथास्ति । हौत्रं तु साङ्गोपाङ्गतया ऋग्वेदे एव विहितम् । न यजुर्वेदे, अध्वर्युकर्तृकत्वाभावात् । यजुर्वेदे हौत्राम्नानं तु ऋग्वेदशेष एव; ऋग्वेदादेव कृत्स्नविधिमुपादाय सूत्रकारैरपि हौत्रमाम्नातम्; स्पष्टमेवोपदर्शितं किल परिभाषासूत्रे 'ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ' इति सूत्रविवृतौ हरदत्ताचार्यैः— यश्च यजुर्वेदे हौत्राम्नायः स ऋग्वेदशेष एव, यच्च सूत्रकारेण हौत्रमाम्नातं तद्वेदान्तरात् कृत्स्नविधिमुपादाय आम्नातं मन्तव्यमिति ॥

ऋग्वेदविहितहौत्रस्योच्चैष्ट्वमेव स्वरः सर्वसंप्रतिपन्नः । यजुर्वे-

दविहितहौत्रस्य ऋक्छेषत्वस्य स्पष्टमुपदर्शितत्वात् याजुषस्यापि हौत्रस्य स एव स्वरः अकामेनाप्यभ्युपगन्तव्यः ॥

तदेव स्पष्टीकृतम्; 'उपांशु यजुर्वेदेन' इति परिभाषासूत्रभाष्ये कपर्दिस्वामिभिः हरदत्ताचार्यैश्च। कपर्दिस्वामिनस्तु—करणवदशब्दवदमनःप्रयोग उपांशु, यजुर्वेदविहितानां मन्त्राणां ऋचां साम्नां चोपांशुप्रयोग एव, यजुषामप्यूहप्रवराणाम्; ऋग्वेदविहितं हौत्रम्; तच्चोच्चैष्ट्वम्; यद्यपि यजुर्वेदविहितं हौत्रं इष्टिहौत्रादि, तदप्युच्चैरेव कर्तव्यम्; जामदग्न्ये चतूरात्रे यजुर्वेदेनाग्नेयादयः पुरोडाशा विहिताः उपसत्सु; तेषां होत्रमन्त्राः सामवेदविहिताः 'अग्निर्होता वेत्वग्नेर्होत्रम्' इत्यादयः। तेषां यजुर्वेदविहितहोमशेषविहितत्वादुपांश्वेव प्रयोगः इति ॥

हरदत्ताचार्यास्तु— करणवत् अशब्दममनःप्रयोग उपांशु, तात्वादिव्यापारे प्रत्यक्षेऽपि यत्र शब्दो न श्रूयते न च मनोव्यापारमात्रं तदुपांश्वित्युच्यते; यजुर्वेदविहितमन्त्रा उपांशु प्रयोक्तव्या इत्यर्थः। अत्रापि वेदग्रहणात् यजुर्वेदविहितानां साम्नामृचामूहादीनां चोपांशुप्रयोगः सिद्धो भवति। यत्र याजु-

वैदिकानामङ्गानां भूयस्त्वं तत्कर्म सकलं यजुर्वेदविहितमेवेति मन्तव्यम्; यथा आधाने सामगानसहितः सकलप्रयोगो यजुर्वेदविहित एवेति आधानाङ्गभूतस्य साम्नोऽपि प्रयोग उपांश्वेव भवति। अतो यच्चाश्वलायनेन अग्निहोत्रमाम्नातं तदुपांश्वेव प्रयोक्तव्यम्; तथा च याजुर्वेदिकमपि हौत्रमृग्वेदशेषत्वात्सर्वमुच्चैरेव प्रयोक्तव्यम्। तथा जामदग्न्ये चतूरात्रे उपसदि पुरोडाशहोमार्थे मन्त्राः 'अग्नेर्होत्रम्' इत्येवमादयः सामवेदे आम्नाताः याजुर्वेदिकप्रयोगविधिशेषत्वादुपांश्वेव प्रयोक्तव्या इति॥

हरदत्ताचार्यैरेव प्राक् 'यजुर्वेदेनाग्निहोत्रम्' इति सूत्रव्याख्याने— अग्निहोत्रं यजुर्वेदेन विधीयते, न ऋग्वेदसामवेदाभ्यामित्यर्थः। यश्चाग्निहोत्रविधिराम्नातः ऋग्वेदे स यजुर्वेदशेष एव। यच्चाश्वलायनेनाग्निहोत्रमाम्नातं तद्यजुर्वेदादेव विधिमुपादायाम्नातमिति मन्तव्यमित्युक्तम्। अग्निहोत्रं तु याजुर्वेदिकमिति सुप्रसिद्धम्; तथापि ऋग्वेदे मन्त्राणामाम्नानात्, आश्वलायनाचार्यैः सूत्रितत्वाच्च तच्छाखीयाः आर्चिकाग्निहोत्रमेवानुतिष्ठन्ते। मन्त्राणामार्चिकत्वेऽपि उपांश्वेव प्रयुञ्जते।

आर्चिकाग्निहोत्रे याजुषाग्निहोत्राघटकानामार्चिकानामेव केषां-चिन्मन्त्राणां विनियोगो दृश्यते; तेषामप्युपांश्वेव प्रयोगो-ऽङ्गीकृतः, याजुषाग्निहोत्रशेषत्वात्तेषाम् । जामदग्न्यचतूरात्रे सामवेदाम्नातानामपि मन्त्राणां याजुर्वेदिकप्रयोगविधिशेषत्वादे-वोपांशुप्रयोगोऽङ्गीकृतः । एवं प्रकृते हौत्रमन्त्राणां याजुषत्वेऽपि ऋक्छेषत्वादुच्चैरेव प्रयोगोऽङ्गीकृतः । अत एव याजुषहौत्रम-न्त्राणामुपांशुप्रयोगः सूत्रकारैर्वा भाष्यकारैर्वा न कैरप्यङ्गी-कृतः ॥

एवं स्थिते कथं याजुषहौत्रमन्त्राणामुपांशुत्वमापादितमिति जानन्तु कृतधियः ॥

तत्र तत्र याजुषहौत्रमन्त्राणां क्रियमाणोच्चैःपाठः साधुरेव । विकल्पेनानुष्ठानं तूत्तरत्र वक्ष्यते । यजुर्वेदस्य हौत्रविधाय-कत्वात् तदुपदिष्टहौत्रमन्त्राणामुच्चैष्ट्वस्य निरूपणाच्च याजुष-हौत्रपरित्यागे शाखारण्डत्वदोषः न कथमपि परिहर्तुं शक्यः ।

एतेन तदुपांशुत्वभीरुणा धूर्तस्वामिनेत्यारभ्य तस्माद-विहितत्वादेव न याजुषहौत्रस्यानुष्ठेयत्वमिति ग्रन्थः परास्तः ।

भगवता धूर्तस्वामिनापि नोपांशुत्वभयेन याजुषहौत्रस्य ऋक्छेषत्वमङ्गीकृतम्, श्रुतिसूत्रानुरोधेनैवाङ्गीकृतम् । याजुषहौत्रविधायकश्रुतेरुपलम्भात्, ऋग्वेदशेषत्वेनोच्चैष्ट्वस्य स्वतः सिद्धत्वात्, ऋग्वेदविहितत्वेऽप्यग्निहोत्रस्य याजुषत्वेन यथा उच्चैष्ट्वस्य सर्वथा अप्राप्तिस्तथा हौत्रस्य यजुर्वेदविहितत्वेऽप्यार्चिकत्वेनोपांशुत्वस्य सर्वथा अप्राप्तत्वाच्च न साङ्कर्यादिदोषगन्धस्याप्यवकाशः ॥

'देवा वै नर्चिन' इत्यादिश्रुतेः अनुवादत्वं नास्माद्दृशैर्निरूपयितुं शक्यम् ॥

वस्तुतस्त्वनुवादत्वे आपस्तम्बादिकल्पसूत्रेषु हौत्रनिरूपणस्य विद्यारण्यभाष्यादिषु तादृशकल्पसूत्रादिकमुदाहृत्य सर्वमन्त्राणां विनियोगनिरूपणस्य च वैय्यर्थ्यं केन वारयितुं शक्यम् । तस्मादनुवादत्वमपि निरूपयितुमशक्यम् ॥

याजुषहौत्रानुष्ठानेऽपि— 'ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ, ऋग्वेदेन होता करोति' इत्याद्यापस्तम्बादिसूत्राणां न काप्यनुपपत्तिः, ऋक्छेषत्वाद्याजुषहौत्रस्य । तस्माद्विहितत्वा-

याजुषहौत्रमनुष्ठेयमेव ॥

उताप्रतिषिद्धत्वाद्वा इति द्वितीयपक्षः विचार्यते— यत्तु अथ अनिषिद्धत्वाद्याजुषहौत्रस्यानुष्ठेयत्वमिति द्वितीयपक्षानुसरणेऽपि 'तद्ये केचन छान्दोग्ये वाध्वर्यवे वा हौत्रामर्शाः समाम्नाता न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य' इत्यनेन सूत्रेण भगवता आश्वलायनाचार्येण निषिद्धत्वान्नानुष्ठेयत्वं तस्य प्राप्नोतीति ॥

तत्सूत्रवृत्तिस्वारस्यानालोचननिमित्तकम् । नारायणवृत्तौ तु तत्राध्वर्यवे वा छान्दोग्ये वा वेदे ये केचन हौत्रामर्शाः पदार्थाः दृष्टाः कर्तव्यतया ते न कर्तव्याः; हौत्रामर्शा इति हौत्राभासा इत्यर्थः; कुतः? अकृत्स्नत्वाद्धौत्रस्य, तौ हि वेदौ हौत्रस्य न विधायकौ अन्यपरत्वात्तयोः। अतः तत्र ये समाम्नाताः पदार्थाः ते अनर्थका वा भवन्तु तत्सापेक्षेणापि वा प्रयोगशास्त्रान्तरेण सार्थका वा भवन्तु, सर्वथा तावदाश्वलायनसूत्रप्रयोगे ते न कर्तव्या एवेति निश्चिनुमः । अकृत्स्नत्वादिति हेतुवचनाद्यत्र कृत्स्नं हौत्रमाध्वर्यवेषु विहितं दर्शपूर्णमासनिरूढकौकिल्यादिषु तत्र तत्कर्तव्यमेवेति सिद्धमिति ।

अत्र सूत्रस्वारस्यपर्यालोचनायां याजुषहौत्रमध्ययनेनैव परिगृहीतं भवति। तथा हि— सूत्रे तु 'अकृत्स्नत्वाद्धौत्रस्य' इत्युक्तम्; किन्नाम कृत्स्नत्वम्? यावदङ्गाङ्गयनुष्ठानपर्याप्तत्वमेव खलु; छान्दोग्ये वाध्वर्यवे वा वेदे यत्र यावदङ्गाङ्गयनुष्ठानपर्याप्तं हौत्रं विहितम्, न तादृशहौत्रनिषेधः आश्वलायनाचार्यैः कृतः। तादृशहौत्रस्यापि निषेध्यकोटिप्रविष्टत्वे अकृत्स्नत्वादिहेतुवचनं व्यर्थमेव स्यात्।

यत्र क्वचन छान्दोग्ये वा आध्वर्यवे वा वेदे केवलयाज्यावाक्यानि वा केवलपुरोनुवाक्यावाक्यानि वा असमग्रतया पठितानि तान्येव न कुर्यादिति 'हौत्रामर्शाः' इत्यनेन द्योत्यते॥

विहितं किल दर्शपूर्णमासनिरूढकौकिल्यादिषु कृत्स्नं हौत्रमाध्वर्यवेषु तादृशं तु कुर्यादित्येवाश्वलायनाचार्याणामभिप्रायः स्पष्टीकृतो भवति॥

सुस्पष्टमेव विवृतं नारायणीये— अकृत्स्नत्वादिति हेतुवचनात् यत्र कृत्स्नं हौत्रमाध्वर्यवेषु विहितं दर्शपूर्णमासनिरूढकौकिल्यादिषु तत्र तत्कर्तव्यमेवेति सिद्धमिति।

परं तु एतादृशविशेषोऽवगन्तव्यः—

ऋक्शाखिनां छान्दोग्यमाध्वर्यवं वा सामान्यशास्त्रम्; ऋग्वेदस्तु विशेषशास्त्रम्, इतरेषां विपर्ययेण, तत्र विशेषशास्त्रेण विधाने तच्छाखीयैस्तदेवानुष्ठेयम्, नान्यत् । विशेषशास्त्रेण विधानाभावे तु सामान्यशास्त्रोक्तरीत्यैवानुष्ठेयमित्यत्र न कोऽपि विशय इत्यास्तां तावदेतत् ।

भवदभिमतरीत्या याजुषहौत्रस्य सर्वथापरिग्राह्यत्वे महदनिष्टमापतति । तथा हि— कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयकाण्डे प्रथमप्रपाठके चतुर्थानुवाके— 'अग्निर्वा अकामयत । अन्नादो देवानाꣳ स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' इत्यादिवाक्यैः देवनक्षत्राणामिष्टयो विहिताः । प्राथमिकाद्यनुवाकेषु याज्यापुरोनुवाक्ये सप्रपञ्चं निरूपिते ।

सूत्रेष्वपि विहिताः किलेष्टयो आपस्तम्बबोधायनाद्याचार्यवर्यैः । अनुष्ठीयन्ते किल प्राचीनकालादारभ्येदानींतनैरपि शिष्टवरैः ।

पूर्वोपदर्शितनक्षत्रेष्टयादीनाम् ऋग्वेदे हौत्रमन्त्रा नाम्नाताः; न सूत्रितं चाश्वलायनाचार्यैः; तथापि ऋक्शाखीयाः यजुर्वेदादेव कृत्स्नविधिमुपादाय होतृकार्यमनुतिष्ठन्ति। यदि सर्वथा नादर्तव्यं याजुषहौत्रम् तदा बहोः कालादारभ्येदानींतनैरप्यनुष्ठीयमानानां नक्षत्रेष्टयादीनां लोप एव स्यादिति महदनिष्टमापद्येत। अस्मन्मतरीत्या तु विशेषशास्त्रेणानाम्नानेऽपि सामान्यशास्त्रेणाम्नानात् यजुर्वेदादेव कृत्स्नविधिमुपादाय होतृकार्यकरणे न काप्यनुपपत्तिरिति सर्वं समञ्जसम्।

यदि भगवत आश्वलायनस्य सर्वथैव याजुषहौत्रास्वीकरणे आग्रहः तदा 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्' इत्याद्यभियुक्तोक्तसूत्रलक्षणानुसारेणाल्पाक्षरेण न तान् कुर्यादित्येव सूत्रयेत्। न तथा सूत्रयामास। 'अकृत्स्नत्वाद्धौत्रस्य' इति हेतूपन्यासपूर्वकं बह्वक्षरेण सूत्रयामास॥

तस्मात्सर्वज्ञस्य भगवत आश्वलायनस्य अकृत्स्नहौत्रनिषेधे एव तात्पर्यं न सर्वथा कृत्स्नयाजुषहौत्रापरिग्रहे॥

किं च आश्वलायनसूत्रे 'प्रथमस्यामुपसदि वृतायां प्रेषितः

पुरीष्यचितेऽन्वाह होता दीक्षितश्चेत्' इत्यारभ्य 'त्रयमेत-त्साग्निचित्ये' इत्यन्तसूत्रैः महाग्निचयने होतृशंसनमभिहितम्; मन्त्रा अप्याम्नाता ऋग्वेदे। शंसन्ति च होतारः। एवमेव काठकादिषु सावित्रादिचयनेष्वपि शंसन्ति होतारः। ऋग्वेदे वा आश्वलायनसूत्रे वा शंसनं नाभिहितम्; मन्त्रा अपि नाम्नाता ऋग्वेदे। आध्वर्यवकाण्डे त्वाम्नाता मन्त्राः, आपस्तम्बाचार्यैः शंसनं चाभिहितम्। तदनुरोधेन याजुषानेव मन्त्राना-दाय शंसन्ति होतारः। याजुषमन्त्राणामस्वीकार्यत्वे अयम-प्यपरो दोषः दुर्निवारः॥

तस्मान्निषिद्धत्वाभावात् द्वितीयपक्षोऽपि न क्षोदक्षमः।

अथ तृतीयपक्षं किंचिद्विचारयामः। यत्तु अथ परम्पराप्राप्तत्वाद्याजुषहौत्रं विधेयमित्यपि पक्षो नातिमनोरमः; यतः केचन दुराग्रहान्धबुद्धयः प्रमाणमपर्यालोच्यैव शाखारण्डत्वदोषबिभीषिकां पुरस्कृत्य सूत्रकारादारभ्येदमविच्छिन्नपरम्पराप्राप्तमिति बलात्प्रतार्य याजुषहौत्रमन्वतिष्ठन्। तथापि प्रमाणपरतन्त्राः संस्कृतमतयः 'सर्वैर्ज्योतिष्टोमः,' 'ऋग्वेदयजुर्वेदाभ्यां दर्श-

पूर्णमासौ' इत्यादीनि सूत्राण्येव प्रमाणीकृत्य वेदत्रयसाध्ये कर्मणि तत्तद्वेदविहिताध्वर्य्यवादिकरणे न शाखारण्डत्वदोष इति निश्चित्य याजुर्वेदिकत्वेन स्वशाखोक्तमपि हौत्रं परित्यज्य आर्चिकमेव हौत्रमकुर्वन्नित्यपि सर्वतोमुखी वार्ता श्रूयते । तथा च परम्पराया द्वैविध्यात् विनिगमनाविरहान्नैकस्या एव प्रामाण्यमधिगन्तुं शक्यमिति सर्वमवदातम् । यावद्विशेषदर्शनं सिद्धान्त इति ॥

तदपि न मनोज्ञम्; यद्यपि न परम्परया याजुषहौत्रमनुतिष्ठन्ति । किं त्वार्चिकमेव हौत्रमनुतिष्ठन्ति । आन्ध्रदेशे तु बहोः कालादारभ्येदानीमप्यनुतिष्ठन्ति याजुषमेव हौत्रं हविर्यागानाम् ॥

अस्ति किंचित्कारणमुभयत्रानुष्ठानभेदे । ऋक्शाखीयास्तु ऋग्वेदे हौत्रमन्त्राणामाम्नानात् आश्वलायनाचार्यैः सूत्रितत्वाच्च आर्चिकमेव हौत्रमनुष्ठातुमनुमन्यन्तेऽस्मद्देशे नान्यत् याजुषहौत्रम्; ज्योतिष्टोमादिक्रतुष्वार्चिकहौत्रापेक्षायाः सत्त्वेन तदध्येतृऋक्शाखीयानामभिप्रायानुरोधेन सर्वेऽप्यनुतिष्ठन्त्यार्चिकमेव हौत्रम् ॥

आन्ध्रदेशे तु याजुषा एव ऋग्हौत्रमभ्यस्य होतृकार्यक-रणे समर्था दरीदृश्यन्ते । ऋक्शाखीया अपि बहोः काला-दारभ्य ईर्ष्यासूयादिकमुत्सृज्य सूत्राणामाशयं च पर्यालोच्य याजुषयजमानकर्तृकहविर्यागेषु याजुषमेव हौत्रमनुष्ठाय सोमा-दिष्वार्चिकहौत्रमनुतिष्ठन्ति । तस्मादेवोभयत्रानुष्ठानभेदो दृश्य-ते । लोके उभयविधानुष्ठानसत्त्वे एतद्ग्रन्थकारैरेव परम्परायाः द्वैविध्यात् विनिगमनाविरहात् नैकस्या एव प्रामाण्यमधिगन्तुं शक्यमिति स्पष्टं दर्शितत्वात् नास्माकं तत्र विशेषतः श्रमः । वस्तुतस्तु, तत्तद्वेदेषु तदनुसारितत्तत्सूत्रादिषु च सामान्यतो विहितानां पदार्थानां विशेषतो वेदान्तरेषु सूत्रान्तरेषु च विधाने तत्तच्छाखीयैस्तत्तत्सूत्रानुसारिभिर्वा तदनुष्ठेयमेव, तेषां विशेषशास्त्रत्वात् ॥

अन्यथा तत्तद्वेदेषु तदनुसारितत्तत्सूत्रादिषु च सामान्येन विधानादेवोपपत्तौ पुनर्वेदान्तरेषु सूत्रान्तरेषु च विशेषतो विधानस्य वैयर्थ्यं न ब्रह्मणापि परिहर्तुं शक्यम् ।

सर्वज्ञकल्पस्य वेदस्य सर्वज्ञानां महर्षीणां च भ्रान्तिमूलक-

त्वकथनमेव भ्रान्तिमूलकं नान्यत् । वेदेषु सूत्रेषु वा एकपदार्थस्य उभयत्र विधाने विकल्प एव अङ्गीकार्यः, विकल्पस्याष्टदोषदुष्टत्वेऽपि समानप्रमाणेषु तारतम्यनिरूपणस्याशक्यत्वात्, एकस्याप्यप्रामाण्यासंभवाच्च । विकल्पाश्रयणेनैव द्वयोः प्रामाण्यमङ्गीकार्यम् ।

तथा च पूर्वोपदर्शितहौत्रादिपदार्थानामुभयत्र विधानात् 'उदिते जुहोति' इतिवत् व्यवस्थितविकल्प एव अङ्गीकरणीयः । तथा सति वेदत्रयस्य सर्वसूत्राणां च परस्पराविरोधेन न कोऽपि विरोधः प्रतीयते । तस्मात्तत्तच्छाखीयैस्तत्तत्सूत्रानुसारिभिश्च तत्रतत्र विशेषतो विहिताः पदार्था एवानुष्ठेयाः न सामान्यशास्त्रविहिताः । अन्यथा शाखारण्डत्वादिदोषस्य कथमपि निष्कासयितुमशक्यत्वात् ॥

सर्वथा विशेषशास्त्रेणाविधाने तु सामान्यशास्त्रविहिता एवानुष्ठेयाः ॥

तस्माद्यथाविहितानुष्ठानमेव श्रेयस्करमित्यलं बहुना ॥

एतेनैव सविवरणयाजुषहौत्रसंक्षेपाख्यग्रन्थोक्तयोऽप्युत्तरिता इति । इति शिवम् ॥



